भवेत्कल्याणसम्पत्ती राजवित्तसमागमः
अशुभैरल्पमृत्युश्च राहुप्रत्यन्तरे द्विज १३

वस्त्रलाभो महातेजो ब्रह्मज्ञानं च सद्गुरोः
राज्यालंकरणावाप्तिर्गुरुप्रत्यन्तरे फलम् १४

दुर्दिने लभते पीडां वातपित्ताद्विशेषतः
धनधान्ययशोहानिः शनिप्रत्यन्तरे भवेत् १५

पुत्रजन्महयप्राप्तिर्विद्यालाभो महोन्नतिः
शुक्लवस्त्रान्नलाभश्च बुधप्रत्यन्तरे भवेत् १६

ब्राह्मणेन समं युद्धमपमृत्युः सुखक्षयः
सर्वत्र जायते क्लेशः केतोः प्रत्यन्तरे भवेत् १७

धनलाभो महत्सौख्यं कन्याजन्म सुभोजनम्
प्रीतिश्च सर्वलोकेभ्यो भृगुप्रत्यन्तरे विधोः १८

अन्नागमो वस्त्रलाभः शत्रुहानिः सुखागमः
सर्वत्र विजयप्राप्तिः सूर्यप्रत्यन्तरे विधोः १९

शत्रुभीतिं कलिं घोरं रक्तस्रावं मृतेर्भयम्
कुजस्यान्तर्दशायां च कुजप्रत्यन्तरे वदेत् २०

बन्धनं राजभङ्गश्च धनहानिः कुभोजनम्
कलहः शत्रुभिर्नित्यं राहुप्रत्यन्तरे भवेत् २१

मतिनाशस्तथा दुःखं सन्तापः कलहो भवेत्
विफलं चिन्तितं सर्वं गुरोः प्रत्यन्तरे भवेत् २२

स्वामिनाशस्तथा पीडा धनहानिर्महाभयम्

वैकल्यं कलहस्त्रासो शनेः प्रत्यन्तरे भवेत्  २३

सर्वथा बुद्धिनाशश्च धनहानिर्ज्वरस्तनौ
वस्त्रान्नसुहृदां नाशो बुधप्रत्यन्तरे भवेत्  २४

आलस्यं च शिरःपीडा पापरोगोऽपमृत्युकृत्
राजभीतिः शस्त्रघातो केतोः प्रत्यन्तरे भवेत्  २५

चाण्डालात्सङ्कटस्त्रासो राजशास्त्रभयं भवेत्
अतिसाराऽथ वमनं भृगोः प्रत्यन्तरे भवेत्  २६

भूमिलाभोऽर्थसम्पत्तिः सन्तोषो मित्रसङ्गतिः
सर्वत्र सुखमाप्नोति रवेः प्रत्यन्तरे जनः  २७

याम्यां दिशि भवेल्लाभः सितवस्त्रविभूषणम्
संसिद्धिः सर्वकार्याणां विधोः प्रत्यन्तरे भवेत्  २८

बन्धनं बहुधा रोगो बहुघातः सुहृद्भयम्
राह्वन्तर्दशायां च ज्ञेयं राह्वन्तरे फलम्  २९

सर्वत्र लभते मानं गजाश्वं च धनागमम्
राहोरन्तर्दशायां च गुरोः प्रत्यन्तरे जनः  ३०

बन्धनं जायते घोरं सुखहानिर्महद्भयम्
प्रत्यहं वातपीडा च शनेः प्रत्यन्तरे भवेत्  ३१

सर्वत्र बहुधा लाभः स्त्रीसङ्गाच्च विशेषतः
परदेशभवा सिद्धिर्बुधप्रत्यन्तरे भवेत्  ३२

बुद्धिनाशो भयं विघ्नो धनहानिर्महद्भयम्
सर्वत्र कलहोद्वेगौ केतोः प्रत्यन्तरे फलम्  ३३

योगिनीभ्यो भयं भूयादश्वहानिः कुभोजनम्
स्त्रीनाशः कुलजं शोकं शुक्रप्रत्यन्तरे भवेत्  ३४

ज्वररोगो महाभीतिः पुत्रपौत्रादिपीडनम्
अल्पमृत्युः प्रमादश्च रवेः प्रत्यन्तरे भवेत्  ३५

उद्वेगकलहो चिन्ता मानहानिर्महद्भयम्
पितुर्विकलता देहे विद्योः रवेः प्रत्यन्तरे भवेत्  ३६

भगन्दरकृता पीडा रक्तपित्तप्रपीडनम्
अर्थहानिर्महोद्वेगः कुजप्रत्यन्तरे फलम्  ३७

हेमलाभो धान्यवृद्धि कल्याणं सुफलोदयः
गुरोरन्तर्दशायां च भवेद् गुर्वन्तरे फलम्  ३८

गोभूमिहयलाभः स्यात्सर्वत्र सुखसाधनम्
संग्रहो ह्यन्नपानादेः शनेः प्रत्यन्तरे भवेत्  ३९

विद्यालाभो वस्त्रलाभो ज्ञानलाभः समौक्तिकः
सुहृदां सङ्गमः स्नेहो बुधप्रत्यन्तरे भवेत्  ४०

जलभीतिस्तथा चौर्यं बन्धनं कलहो भवेत्
अपमृत्युर्भयं घोरं केतोः प्रत्यन्तरे द्विज   ४१

नानाविद्यार्थसम्प्राप्तिर्हेमवस्त्रविभूषणम्
लभते क्षेमसन्तोषं भृगोः प्रत्यन्तरे जनः  ४२

नृपाल्लाभस्तथा मित्रात्पितृतो मातृतोऽपि वा
सर्वत्र लभते पूजां रवेः प्रत्यन्तरे जनः  ४३

सर्वदुःखविमोक्षश्च मुक्तालाभो हयस्य च

सिद्ध्यन्ति सर्वकार्याणि विधो प्रत्यन्तरे द्विज ४४

शस्त्रभीतिर्गदे पीडा वह्निमान्द्यमजीर्णता
पीडा शत्रुकृता भूरिर्भौमप्रत्यन्तरे भवेत् ४५

चाण्डालेन विरोधः स्याद्भयं तेभ्यो धनक्षतिः
कष्टं जीवान्तरे ज्ञेयं राहोः प्रत्यन्तरे ध्रुवम् ४६

देहपीडा कलेर्भीतिर्भयमन्त्यजलोकतः
दुःखं शन्यन्तरे नाना शनेः प्रत्यन्तरे भवेत् ४७

बुद्धिनाशः कलेर्भीतिरन्नपानादिहानिकृत्
धन्हानिर्भयं शत्रोः शनेः प्रत्यन्तरे बुधे ४८

बन्धः शत्रोर्गृहे जातो वर्णहानिर्बहुक्षुधा
चित्ते चिन्ता भयं त्रासः केतो प्रत्यन्तरे भवेत् ४९

चिन्तितं फलितं वस्तु कल्याणं स्वजने सदा
मनुष्यकृतितो लाभः भृगोः प्रत्यन्तरे द्विज ५०

राजतेजोऽधिकारित्वं स्वगृहे जायते कलिः
ज्वरादिव्याधिपीडा च रवेः प्रत्यन्तरे भवेत् ५१

स्फीतबुद्धिर्महारम्भो मन्दतेजा बहुव्ययः
बहुस्त्रीभिः समं भोगो विधोः प्रत्यन्तरे शनौ ५२

तेजोहानि पुत्रघातो वह्निभीती रिपोर्भयम्
वातपित्तकृता पीडा कुजप्रत्यन्तरे भवेत् ५३

धननाशो वस्त्रहानिर्भूमिनाशो भयं भवेत्
विदेशगमनं मृत्युः राहो प्रत्यन्तरे शनौ ५४

गृहेषु स्वीकृतं छिद्रं ह्यसमर्थो निरीक्षणे
अथ वा कलिमुद्वेगं गुरोः प्रत्यन्तरे वदेत्  ५५

बुद्धिर्विद्यार्थलाभो वा वस्त्रलाभो महत्सुखम्
बुधस्यान्तर्दशायाञ्च बुधप्रत्यन्तरे भवेत्  ५६

कठिनान्नस्य सम्प्राप्तिरुदरे रोगसम्भवः
कामलं रक्तपित्तं च केतोः प्रत्यन्तरे भवेत्  ५७

उत्तरस्यां भवेल्लाभो हानिः स्यात्तु चतुष्पदात्
अधिकारो नृपागारे भृगोः प्रत्यनतरे भवेत्  ५८

तेजोहानिर्भवेद्रोगस्तनुपीडा यदा कदा
जायते चित्तवैकल्यं रवेः प्रत्यन्तरे बुधे  ५९

स्त्रीलाभश्चार्थसम्पत्तिः कन्यालाभो महद्धनम्
लभते सर्वतः सौख्यं विधोः प्रत्यन्तरे जनः  ६०

धर्मधीधनसम्प्राप्तिश्चौराग्नयादिप्रपीडनम्
रक्तवस्त्रं शस्त्रघातं भौमप्रत्यन्तरे भवेत्  ६१

कलहो जायते स्त्रीभिरकस्माद्भयसम्भवः
राजशस्त्राकृता भीतिः राहोः प्रत्यन्तरे द्विज   ६२

राज्यं राज्याधिकारो वा पूजा राजसमुद्भवा
विद्याबुद्धिसमृद्धिश्च गुरोः प्रत्यन्तरे भवेत्  ६३

वातपित्तमहापीडा देहघातसमुद्भवा
धननाशमवाप्नोति शनेः प्रत्यन्तरे जनः  ६४

आपत्समुद्भवोऽकस्माद्देशन्तरसमागमः

केत्वन्तरेऽर्थहानिश्च केतोः प्रत्यन्तरे भवेत् ६५

म्लेच्छभीरर्थनाशो वा नेत्ररोगः शिरोव्यथा
हानिश्चतुष्पदानां च भृगोः प्रत्यन्तरे भवेत् ६६

मित्रैः सह विरोधश्च स्वल्पमृत्युः पराजयः
मतिभ्रंशो विवादश्च रवेः प्रत्यन्तरे भवेत् ६७

अन्ननाशो याशोहानिर्देहपीडा मतिभ्रमः
आमवातादिवृद्धिश्चविधोः प्रत्यन्तरे भवेत् ६८

शस्त्रघातेन पातेन पीडितो वह्निपीडया
नीचाद्भीती रिपोः शङ्का कुजप्रत्यन्तरे भवेत् ६९

कामिनीभ्यो भयं भूयात्तथा वैरिसमुद्भवः
क्षुद्रादपि भवेद्भीती राहोः प्रत्यन्तरे भवेत् ७०

धनहानिर्महोत्पातो शस्त्रमित्रविनाशनम्
सर्वत्र लभते क्लेशं गुरोः प्रत्यन्तरे फलम् ७१

गोमहिष्यादिमरणं देहपीडा सुहृद्वधः
स्वल्पाल्पलाभकरणं शनेः प्रत्यन्तरे फलम् ७२

बुद्धिनाशो महोद्वेगो विद्याहानिर्महाभयम्
कार्यसिद्धिर्न जायते ज्ञस्य प्रत्यन्तरे फलम् ७३

श्वेताश्ववस्त्रमुक्ताद्यं दिव्यस्त्रीजङ्गजं सुखम्
लभते शुक्रन्तरे प्राप्ते शुक्रप्रत्यन्तरे जनः ७४

वातज्वरः शिरःपीडा राज्ञः पीडा रिपोरपि
जायते स्वल्पलाभोऽपि रवेः प्रत्यन्तरे फलम् ७५

कन्याजन्म नृपाल्लाभो वस्त्राभरणसंयुतः
राज्याधिकारसंप्राप्तिः चन्द्रप्रत्यन्तरे भवेत्  ७६

रक्तपित्तादिरोगश्च कलहस्ताडनं भवेत्
महान्क्लेशो भवेदत्र कुजप्रत्यन्तरे द्विज  ७७

कलहो जायते स्त्रीभिरकस्माद्भयसम्भवः
राजतः शत्रुतः पीडा राहोः प्रत्यन्तरे भवेत्  ७८

महद्द्रव्यं महद्राज्यं वस्त्रमुक्तादिभूषणम्
गजाश्वादिपदप्राप्तिः गुरोः प्रत्यन्तरे भवेत्  ७९

खरोष्ट्रछागसम्प्राप्तिर्लोहमाषतिलादिकम्
लभते स्वल्पपीडादि शनेः प्रत्यन्तरे जनः  ८०

धनज्ञानमहल्लाभो राजराज्याधिकारिता
निक्षेपाद्धनलाभोऽपि ज्ञस्य प्रत्यन्तरे भवेत्  ८१

अपमृत्युभयं ज्ञेयं देशाद्देशान्तरागमः
लाभोऽपि जायते मध्ये केतोः प्रत्यन्तरे द्विज  ८२

## अथ सूक्ष्मान्तर्दशाध्यायः  ६२

गुणया स्वस्वदशावर्षैः प्रत्यन्तरदशामितिः
खार्क्रैभक्ता पृथग्लब्धिः सूक्ष्मान्तरदशा भवेत्  १

निजभूमिपरित्यागो प्राणनाशभयं भवेत्
स्थाननाशो महाहानिः निजसूक्ष्मगते रवौ  २

देवब्राह्मणभक्तिश्च नित्यकर्मरतस्तथा
सुप्रीतिः सर्वमित्रश्चैव रवेः सूक्ष्मगते विधौ  ३

क्रूरकर्मरतिस्तिग्मशत्रुभिः परिपीडनम्
रक्तस्त्रावादिरोगाश्च रवेः सूक्ष्मगते कुजे ४

चौराग्निविषभीतिश्च रणे भङ्गः पराजयः
दानधर्मादिहीनश्च रवेः सूक्ष्मगते ह्यगौ ५

नृपसत्काररराजार्हः सेवकैः परिपूजितः
राजचक्षुर्गतः शान्तः सूर्यसूक्ष्मगते गुरौ ६

चौर्यसाहसकर्मार्थं देवब्राह्मणपीडनम्
स्थानच्युतिं मनोदुखं रवेः सूक्ष्मगते शनौ ७

दिव्याम्बरादिलब्धिश्च दिव्यस्त्रीपरिभोगिता
अचिन्तितार्थसिद्धिश्च रवेः सूक्ष्मगते बुधे ८

गुरुतार्थविनाशश्च भृत्यदारभवस्तथा
क्वचित्सेवकसम्बन्धो रवेः सूक्ष्मगते ध्वजे ९

पुत्रमित्रकलत्रादिसाख्यसम्पन्न एव च
नानाविधा च सम्पत्ती रवेः सूक्ष्मगते भृगौ १०

भूषणं भूमिलाभश्च सम्मानं नृपपूजनम्
तामसत्त्वं गुरुत्वं च निजसूक्ष्मगते विधौ ११

दुःखं शत्रुविरोधश्च कुक्षिरोगः पितुर्मृतिः
वातपित्तकफोद्रेकः विधोः सूक्ष्मगते कुजे १२

क्रोधनं मित्रबन्धूनां देशत्यागो धनक्षयः
विदेशान्निगडप्राप्तिर्विधोः सूक्ष्मगतेप्यगौ १३

छत्रचामरसंयुक्तं वैभवं पुत्रसम्पदः

सर्वत्र सुखमाप्नोति विधोः सूक्ष्मगते गुरौ १४

राजोपद्रवभीतिः स्याद्व्यवहारे धनक्षयः
चौरवं विप्रभीतिश्च विधोः सूक्ष्मगते शनौ १५

राजमानं वस्तुलाभो विदेशाद्वाहनादिकम्
पुत्रपौत्रसमृद्धिश्च विधोः सूक्ष्मगते बुधे १६

आत्मनो वृत्तिहननं सस्यशृङ्गवृषादिभिः
अग्निसूर्यादिभीतिः स्याद्विधोः सूक्ष्मगते ध्वजे १७

विवाहो भूमिलाभश्च वस्त्राभरणवैभवम्
राज्यलाभश्च कीर्तिश्च विधोः सूक्ष्मगते भृगौ १८

क्लेशात्क्लेशः कार्यनाशः पशुधान्यधनक्षयः
गात्रवैषम्यभूमिश्च विधोः सूक्ष्मगते रवौ १९

भूमिहानिर्मनःखेदो ह्यपस्मारी च बन्धुयुक्
पुरक्षोभमनस्तापो निजसूक्ष्मगते कुजे २०

अङ्गदोषो जनाद्भीतिः प्रमदावंशनाशनम्
वह्निसर्पभयं घोरं भौमे सूक्ष्मगतेऽप्यहौ २१

देवपूजारतिश्चात्र मन्त्राभ्युत्थानतत्परः
लोके पूजा प्रमोदश्च भौमे सूक्ष्मगते गुरौ २२

बन्धनान्मुच्यते बद्धो धनधान्यपरिच्छदः
भृत्यार्थबहुलः श्रीमान् भौमे सूक्ष्मगते शनौ २३

वाहनं छत्रसंयुक्तं राज्यभोगपरं सुखम्
कासश्वासादिका पीडा भौमे सूक्ष्मगते बुधे २४

परप्रेरितबुद्धिश्च सर्वत्राऽपि च गर्हिता
अशुचिः सर्वकालेषु भौमे सूक्ष्मगते ध्वजे २५

इष्टस्त्रीभोगसम्पत्तिरिष्टभोजनसंग्रहः
इष्टार्थस्यापि लाभश्च भौमे सूक्ष्मगते भृगौ २६

राजद्वेषो द्विजात्क्लेशः कार्याभिप्रायवंचकः
लोकेऽपि निन्द्यतामेति भौमे सूक्ष्मगते रवौ २७

शुद्धत्वं धनसम्प्राप्तिर्देवब्राह्मणवत्सलः
व्याधिना परिभूयेत् भौमे सूक्ष्मगते विधौ २८

लोकोपद्रवबुद्धिश्च सर्वकार्ये मतिविभ्रमः
शून्यता चित्तदोषः स्यात् स्वीये सूक्ष्मगतेऽप्यगौ २९

दीर्घरोगी दरिद्रश्च सर्वेषां प्रियदर्शनः
दानधर्मरतः शस्तो राहोः सूक्ष्मगते गुरौ ३०

कुमार्गात्कुत्सितोर्थश्च दुष्टश्च परसेवकः
असत्सङ्गमतिर्मूढो राहोः सूक्ष्मगते शनौ ३१

स्त्रीसम्भोगमतिर्वाग्मी लोकसम्भावनावृतः
अन्नमिच्छंस्तनुग्लानी राहोः सूक्ष्मगते बुधे ३२

माधुर्यं मानहानिश्च बन्धनं चाप्रमाकरम्
पारुष्यं जीवहानिश्च राहोः सूक्ष्मगते ध्वजे ३३

बन्धनान्मुच्यते बद्धः स्थानमानार्थसञ्चयः
कारणाद् द्रव्यलाभश्च राहोः सूक्ष्मगते भृगौ ३४

व्यक्तार्शो गुल्मरोगश्च क्रोधहानिस्तथैव च

वाहनादिसुखं सर्वं राहोः सूक्ष्मगते रवौ ३५

मणिरत्नधनावाप्तिर्विद्योपासनशीलवान्
देवार्चनपरो भक्त्या राहोः सूक्ष्मगते विधौ ३६

निर्जितो जनविद्रावो जने क्रोधश्च बन्धनम्
चौर्यशीलरतिर्नित्यं राहोः सूक्ष्मगते कुजे ३७

शोकनाशो धनाधिक्यमग्निहोत्रं शिवार्चनम्
वाहनं छत्रसंयुक्तं स्वीये सूक्ष्मगते गुरौ ३८

व्रतभङ्गो मनस्तापो विदेशे वसुनाशनम्
विरोधो बन्धुवर्गैश्च गुरोः सूक्ष्मगते शनौ ३९

विद्याबुद्धिविवृद्धिश्च ससम्मानं धनागमः
गृहे सर्वविधं सौख्यं गुरोः सूक्ष्मगते बुधे ४०

ज्ञानं विभवपाण्डित्ये शास्त्रश्रोता शिवार्चनम्
अग्निहोत्रं गुरोर्भक्तिर्गुरोः सूक्ष्मगते ध्वजे ४१

रोगान्मुक्तिः सुखं भोगो धनधान्यसमागमः
पुत्रदारादिसौख्यं च गुरोः सूक्ष्मगते भृगौ ४२

वातपित्तप्रकोपश्च श्लेष्मोद्रेकस्तु दारुणः
रसव्याधिकृतं शूलं गुरोः सूक्ष्मगते रवौ ४३

छत्रचामरसंयुक्तं वैभवं पुत्रसम्पदः
नेत्रकुक्षिगता पीडा गुरोः सूक्ष्मगते विधौ ४४

स्त्रीजनाच्च विषोत्पत्तिर्बन्धनं च रुजोभयम्
देशान्तरगमो भ्रान्तिर्गुरोः सूक्ष्मगते कुजे ४५

व्याधिभिः परिभूतःस्याच्चौरैरपहृतं धनम्
सर्पवृश्चिकभीतिश्च गुरोः सूक्ष्मगतेऽप्यगौ ४६

धनहानिर्महाव्याधिः वातपीडा कुलक्षयः
भिन्नाहारी महादुःखी निजसूक्ष्मगते शनौ ४७

वाणिज्यवृत्तेर्लाभश्च विद्याविभवमेव च
स्त्रीलाभश्च महीप्राप्तिः शनेः सूक्ष्मगते बुधे ४८

चौरोपद्रवकुष्ठादिवृत्तिक्षयविगुम्फनम्
सर्वाङ्गपीडनं व्याधिः शनेः सूक्ष्मगते ध्वजे ४९

ऐश्वर्यमायुधाभ्यासः पुत्रलाभोऽभिषेचनम्
आरोग्यं धनकामौ च शनेः सूक्ष्मगते भृगौ ५०

राजतेजोविकारत्वं स्वगृहे जायते कलिः
किञ्चित्पीडा स्वदेहोत्था शनेः सूक्ष्मगते रवौ ५१

स्फीतबुद्धिर्महारम्भो मन्दतेजा बहुव्ययः
स्त्रीपुत्रैश्च समं सौख्यं शनेः सूक्ष्मगते विधौ ५२

तेजोहानिर्महोद्वेगो वह्निमान्द्यं भ्रमः कलिः
वातपित्तकृता पीडा शनेः सूक्ष्मगते कुजे ५३

पितृमातृविनाशश्च मनोदुःखं गुरुव्ययम्
सर्वत्र विफलत्वं च शनेः सूक्ष्मगतेऽप्यहौ ५४

सन्मुद्राभोगसम्मानं धनधान्यविवर्द्धनम्
छत्रचामरसम्प्राप्तिः शनेः सूक्ष्मगते गुरौ ५५

सौभाग्यं राजसम्मानं धनधान्यादिसम्पदः

सर्वेषां प्रियदर्शी च निजसूक्ष्मगते बुधे ५६

बालग्रहोग्निभीस्तापः स्त्रीगदोद्भवदोषभाक्
कुमार्गी कुत्सिताशी च बौधे सूक्ष्मगते ध्वजे ५७

वाहनं धनसम्पत्तिर्जलजान्नार्थसम्भवः
शुभकीर्तिर्महाभोगो बौधे सूक्ष्मगते भृगौ ५८

ताडनं नृपवैषम्यं बुद्धिस्खलनरोगभाक्
हानिर्जनापवादं च बौधे सूक्ष्मगते रवौ ५९

सुभगः स्थिरबुद्धिश्च राजसन्मानसम्पदः
सुहृदां गुरुसंचारो बौधे सूक्ष्मगते विधौ ६०

अग्निदाहो विषोत्पत्तिर्जडत्वं च दरिद्रता
विभ्रमश्च महोद्वेगो बौधे सूक्ष्मगते कुजे ६१

अग्निसर्पनृपाद्भीतिः कुच्छ्रादिरिपराभवः
भूतावेशभ्रमाद्भ्रन्तिर्बौधे सूक्ष्मगतेप्यहौ ६२

गृहोपकरणं भव्यं दानं भोगादिवैभवम्
राजप्रसादसम्पत्तिर्बौधे सूक्ष्मगते गुरौ ६३

वाणिज्यवृत्तिलाभश्च विद्याविभवमेव च
स्त्रीलाभश्च महाव्याप्तिर्बौधे सूक्ष्मगते शनौ ६४

पुत्रदारादिजं दुःखं गात्रवैषम्यमेव च
दारिद्र्याद् भिक्षुवृत्तिश्च नैजे सूक्ष्मगते ध्वजे ६५

रोगनाशोऽर्थलाभश्च गुरुविप्रानुवत्सलः
सङ्गमः स्वजनैः सार्द्धकेतोः सूक्ष्मगते भृगौ ६६

युद्धं भूमिविनाशश्च विप्रवासः स्वदेशतः
सुहृद्विपातिरार्तिश्च केतोः सूक्ष्मगते रवौ ६७

दासीदाससमृद्धिश्च युद्धे लब्धिर्जयस्तथा
ललिता कीर्तिरुत्पन्ना केतोः सूक्ष्मगते विधौ ६८

आसने भयमश्वादेश्चौरदुष्टादिपीडनम्
गुल्मपीडा शिरोरोगः केतोः सूक्ष्मगते कुजे ६९

विनाशः स्त्रीगुरूणां च दुष्टस्त्रीसङ्गमाल्लघुः
वमनं रुधिरं पित्तं केतोः सूक्ष्मगतेऽप्यगौ ७०

रिपोर्विरोधः सम्पत्तिः सहसा राजवैभवम्
पशुक्षेत्रविनाशार्तिः केतोः सूक्ष्मगते गुरौ ७१

मृषा पीडा भवेत्क्षुद्रमुखोत्पत्तिश्च लङ्घनम्
स्त्रीविरोधः सत्यहानिः केतोः सूक्ष्मगते शनौ ७२

नानाविधजनाप्तिश्च विप्रयोगोऽरिपीडनम्
अर्थसम्पत्समृद्धिश्च केतोः सूक्ष्मगते बुधे ७३

शत्रुहानिर्महत्सौख्यं शङ्करालयनिर्मितिः
तडागकूपनिर्माणं निजसूक्ष्मगते भृगौ ७४

उरस्तापो भ्रमश्चैव गतागतविचेष्टितम्
क्वचिल्लाभः क्वचिद्धानिर्भृगोः सूक्ष्मगते रवौ ७५

आरोग्यं धनसम्पात्तिः कार्यलाभो गतागतैः
बुद्धिविद्याविवृद्धिः स्याद् भृगोः सूक्ष्मगते विधौ ७६

जडत्वं रिपुवैषम्यं देशभ्रंशो महद्भयम्

व्याधिदुःखसमृत्पत्तिर्भृगोः सूक्ष्मगते कुजे ७७

राज्याग्निसर्पजा भीतिर्बन्धुनाशो गुरुव्यथा
स्थानच्युतिर्महाभीतिर्भृगोः सूक्ष्मगतेऽप्यहौ ७८

सर्वत्र कार्यलाभश्च क्षेत्रार्थविभवोन्नतिः
वणिग्वृत्तेर्महालब्धिर्भृगोः सूक्ष्मगते गुरौ ७९

शत्रुपीडा महद्दुःखं चतुष्पादविनाशनम्
स्वगोत्रगुरुहानिः स्याद् भृगोः सूक्ष्मगते शनौ ८०

बांधवादिषु सम्पत्तिर्व्यवहारो धनोन्नतिः
पुत्रदारादितः सौख्यं भृगोः सूक्ष्मगते बुधे ८१

अग्निरोगो महापीडा मुखनेत्रशिरोव्यथा
सञ्चितार्थात्मनः पीडा भृगोः सूक्ष्मगते ध्वजे ८२

अथ प्राणदशाफलाध्यायः ६३

पृथक् खगदशावर्षैर्हन्यात् सूक्ष्मदशामितिम्
खसूर्यैर्विभजेल्लिब्धर्ज्ञेया प्राणदशामितिः १

पौंश्चल्यं विषजा बाधा चौराग्निनृपजं भयम्
कष्टं सूक्ष्मदशाकाले रवौ प्राणदशां गते २

सुखं भोजनसम्पत्तिः संस्कारो नृपवैभवम्
उदारादिकृपाभिश्च रवेः प्राणगते विधौ ३

भूपोपद्रवमन्यार्थे द्रव्यनाशो महद्भयम्
महत्यपचयप्राप्ती रवेः प्राणगते कुजे ४

अन्नोद्भवा महापीडा विषोत्पत्तिर्विशेषतः

अर्थाग्निराजभिः क्लेशो रवेः प्राणगतेऽप्यहौ ५

नानाविद्यार्थसम्पत्तिः कार्यलाभो गतागतैः
नृपविप्राश्रमे सूक्ष्मे रवेः प्राणगते गुरौ ६

बन्धनं प्राणनाशश्च चित्तोद्वेगस्तथैव च
बहुबाधा महाहानी रवेः प्राणगते शनौ ७

राजान्नभोगः सततं राजलाञ्छानतत्पदम्
आत्मा सन्तर्पयेदेवं रवेः प्राणगते बुधे ८

अन्योऽन्यं कलहश्चैव वसुहानिः पराजयः
गुरुस्त्रीबन्धुविर्गैश्च सूर्यप्राणगते ध्वजे ९

राजपूजा धनाधिक्यं स्त्रीपुत्रादिभवं सुखम्
अन्नपानादिभोगादि सूर्यप्राणगते भृगौ १०

स्त्रीपुत्रादिसुखं द्रव्यं लभते नूतनाम्बरम्
योगसिद्धिं समाधिञ्च निजप्राणगते विधौ ११

क्षयं कुष्ठं बन्धुनाशं रक्तस्त्रावान्महद्भयम्
भूतावेशादि जायेत विधोः प्राणगते कुजे १२

सर्पभीतिविशेषेण भूतोपद्रवान् सदा
दृष्टिक्षोभो मतिभ्रंशो विधोः प्राणगतेऽप्यगौ १३

धर्मवृद्धिः क्षमाप्राप्तिर्देवब्राह्मणपूजनम्
सौभाग्यं प्रियदृष्टिश्च चन्द्रप्राणगते गुरौ १४

सहसा देहपतनं शत्रूपद्रववेदना
अन्धत्वं च धनप्राप्तिश्चन्द्रप्राणगते शनौ १५

चामरच्छत्रसम्प्राप्ती राज्यलाभो नृपात्ततः
समत्वं सर्वभूतेषु चन्द्रप्राणगते बुधे १६

शस्त्राग्निरिपुजा पीडा विषाग्निः कुक्षिरोगता
पुत्रदारवियोगश्च चन्द्रप्राणगते ध्वजे १७

पुत्रमित्रकलत्राप्तिविदेशाच्च धनागमः
सुखसम्पत्तिरर्थश्च चन्द्रप्राणगते भृगौ १८

क्रूरता कोपवृद्धिश्च प्राणहानिर्मनोव्यथा
देशत्यागो महाभीतिश्चन्द्रप्राणगते रवौ १९

कलहो रिपुभिर्बन्धः रक्तपित्तादिरोगभीः
निजसूक्ष्मदशामध्ये कुज प्राणगते फलम् २०

विच्युतः सुतदारैश्च बन्धूपद्रवपीडितः
प्राणत्यागो विषेणैव भौमप्राणगतेऽप्यहौ २१

देवार्चनपरः स्त्रीमान्मन्तानुष्ठानतत्परः
पुत्रपौत्रसुखावाप्तिर्भौमप्राणगते गुरौ २२

अग्निबाधा भवेन्मृत्युरर्थनाशः पदच्युतिः
बन्धुभिबन्धुतावाप्तिर्भौमप्राणगते शनौ २३

दिव्याम्बरसमुत्पत्तिर्दिव्याभरणभूषितः
दिव्याङ्गनायाः सम्प्राप्तिर्भौमप्राणगते बुधे २४

पतनोत्पातपीडा च नेत्रक्षोभो महद्भयम्
भुजङ्गाद् द्रव्यहानिश्च भौमप्राणगते ध्वजे २५

धनधान्यादिसम्पत्तिर्लोकपूजा सुखागमा

नानाभोगैर्भवेद्धोगी भौमप्राणगते भृगौ २६

ज्वरोन्मादः क्षयोऽर्थस्य राजविस्नेहसम्भवः
दीर्घरोगी दरिद्रः स्याद्भौमप्राणगते रवौ २७

भोजनादिसुखप्राप्तिर्वस्त्राभरणजं सुखम्
शीतोष्णव्याधिपीडा च भौमप्राणगते विधौ २८

अन्नाशने विरक्तश्च विषभीतिस्तथैव च
साहसाद्धननाशश्च राहौ प्राणगते भवेत् २९

अङ्गसौख्यं विनिर्भीतिर्वाहनादेश्च सङ्गता
नीचैः कलहसम्प्राप्ती राहोः प्राणगते गुरौ ३०

गृहदाहः शरीरे रुङ् नीचैरपहृत धनम्
तथा बन्धनसम्प्राप्ती राहोः प्राणगते शनौ ३१

गुरूपदेशविभवो गुरुसत्कारवर्द्धनम्
गुणवाञ्छीलवांश्चापि राहोः प्राणगते बुधे ३२

स्त्रीपुत्रादिविरोधश्च गृहान्निष्क्रमणादपि
साहसात्कायहानिश्च राहोः प्राणगते ध्वजे ३३

छत्रवाहनसम्पत्तिः सर्वार्थफलसञ्चयः
शिवार्चनगृहारम्भो राहोः प्राणगते भृगौ ३४

अर्शादिरोगभीतिश्च राज्योपद्रवसम्भवः
चतुष्पादादिहानिश्च राहोः प्राणगते रवौ ३५

सौमनस्यं च सद्बुद्धिः सत्कारो गुरुदर्शनम्
पापाद्भीतिर्मनःसौख्यं राहोः प्राणगते विधौ ३६

चाण्डालाग्निवशाद्भीतिः स्वपदच्च्युतिरापदः
मलिनः श्वादिवृत्तिश्च राहोः प्राणगते कुजे ३७

हर्षागमो धनाधिक्यमग्निहोत्रं शिवार्चनम्
वाहनं छत्रसंयुक्तं निज प्राणगते गुरौ ३८

व्रतहानिर्विषादश्च विदेशे धननाशनम्
विरोधो बन्धुवर्गैश्च गुरोः प्राणगते शनौ ३९

विद्याबुद्धिविवृद्धिश्च लोके पूजा धनागमः
स्त्रीपुत्रादिसुखप्राप्तिर्गुरोः प्राणगते बुधे ४०

ज्ञानं विभवपाण्डित्यं शास्त्रज्ञानं शिवार्चनम्
अग्निहोत्रं गुरोर्भक्तिर्गुरोः प्राणगते ध्वजे ४१

रोगान्मुक्तिः सुखं भोगो धनधान्यसमागमः
पुत्रदारादिजं सौख्यं गुरोः प्राणगते भृगौ ४२

वातपित्तप्रकोपं च श्लेष्मोद्रेकं तु दारुणम्
रसव्याधिकृतं शूलं गुरोः प्राणगते रवौ ४३

छत्रचामरसंयुक्तं वैभवं पुत्रसम्पदः
नेत्रकुक्षिगता पीडा गुरोः प्राणगते विधौ ४४

स्त्रीजनाच्च विषोत्पत्तिर्बन्धनं चातिनिग्रहः
देशान्तरगमो भ्रान्तिर्गुरोः प्राणगते कुजे ४५

व्याधिभिः परिभूतः स्याच्चौरैरपहृतं धनम्
सर्पवृश्चिकभीतिश्च गुरोः प्राणगतेऽप्यहौ ४६

ज्वरेण ज्वलिता कान्तिः कुष्ठरोगोदरादिरुक्

जलाग्निकृतमृत्युः स्यान्निजप्राणगते शनौ ४७

धनं धान्यं च माङ्गल्यं व्यवहाराभिपूजनम्
देवब्राह्मणभक्तिश्च शनेः प्राणगते बुधे ४८

मृत्युवेदनदुःखं च भूतोपद्रवसम्भवः
परदाराभिभूतत्वं शनेः प्राणगते ध्वजे ४९

पुत्रार्थविभवैः सौख्यं क्षितिपालादितः सुखम्
अग्निहोत्रं विवाहश्च शनेः प्राणगते भृगौ ५०

अक्षिपीडा शिरोव्याधिः सर्पशत्रुभयं भवेत्
अर्थहानिर्महाक्लेशः शनेः प्राणगते रवौ ५१

आरोग्यं पुत्रलाभश्च शान्तिपौष्टिकवर्धनम्
देवब्राह्मणभक्तिश्च शनेः प्राणगते विधौ ५२

गुल्मरोगः शत्रुभीतिर्मृगया प्राननाशनम्
सर्पाग्निविषतो भीतिः शनेः प्राणगते कुजे ५३

देशत्यागो नृपाद्भीतिर्मोहनं विषभक्षणम्
वातपित्तकृता पीडा शनेः प्राणगतेऽप्यहौ ५४

सेनापत्यं भूमिलाभः संगमः स्वजनैः सह
गौरवं नृपसम्मानं शनेः प्राणगते गुरौ ५५

आरोग्यं सुखसम्पत्तिर्धर्मकर्मादिसाधनम्
समत्वं सर्वभुतेषु निजप्राणगते बुधे ५६

वह्नितस्करतो भीतिः परमाधिर्विषोद्भवः
देहान्तकरणं दुःखं बुधप्राणगते ध्वजे ५७

प्रभुत्वं धनसम्पत्तिः कीर्तिर्धर्मः शिवार्चनम्
पुत्रदारादिकं सौख्यं बुधप्राणगते भृगौ ५८

अन्तर्दाहो ज्वरोन्मादौ बान्धवानां रति स्त्रियाः
प्राप्यते स्तेयसम्पत्तिर्बुधप्राणगते रवौ ५९

स्त्रीलाभश्चार्थसम्पत्तिः कन्यालाभो धनागमः
लभते सर्वतः सौख्यं बुधप्राणगते विधौ ६०

पतितः कुक्षिरोगी च दन्तनेत्रादिजा व्यथा
अर्शांसि प्राणसन्देहो बुधप्राणगते कुजे ६१

वस्त्राभरणसम्पत्तिर्वियोगो विप्रवैरिता
सन्निपातोद्भवं दुखं बुधप्राणगतेऽप्यहौ ६२

गुरुत्वं धनसम्पत्तिर्विद्या सद्गुणसंग्रहः
व्यवसायेन सल्लाभो बुधप्राणगते गुरौ ६३

चौर्येण निधनप्राप्तिर्विधनत्वं दरिद्रता
याचकत्वं विशेषेण बुधप्राणगते शनौ ६४

अश्वपातेन घातश्च शत्रुतः कलहागमः
निर्विचारवधोत्पत्तिर्निजप्राणगते ध्वजे ६५

क्षेत्रलाभो वैरिनाशो हयलाभो मनःसुखम्
पशुक्षेत्रधनाप्तिश्च केतोः प्राणगते भृगौ ६६

स्तेयाग्निरिपुभीतिश्च धनहानिर्मनोव्यथा
प्राणान्तकरणं कष्टं केतोः प्राणगते रवौ ६७

देवद्विजगुरोः पूजा दीर्घयात्रा धनं सुखम्

कर्णे वा लोचने रोगः केतोः प्राणगते विधौ ६८

पित्तरोगो नसावृद्धिर्विभ्रमः सन्निपातजः
स्वबन्धुजनविद्वेषः केतोः प्राणगते कुजे ६९

विरोधः स्त्रीसुताद्यैश्च गृहान्निष्क्रमणं भवेत्
स्वसाहसात्कार्यहानिः केतोः प्राणगतेऽप्यहौ ७०

शस्त्रव्रणैर्महारोगो हृत्पीडादिसमुद्भवः
सुतदारवियोगश्च केतोः प्राणगते गुरौ ७१

मतिविभ्रमतीक्ष्णत्वं क्रूरकर्मरतिः सदा
व्यवसनाद्बन्धनं दुःखं केतोः प्राणगते शनौ ७२

कुसुमं शयनं भूषा लेपनं भोजनादिकम्
सौख्यं सर्वाङ्गभोग्यं च केतोः प्राणगते बुधे ७३

ज्ञानमीश्वरभक्तिश्च सन्तोषश्च धनागमः
पुत्रपौत्रसमृद्धिश्च निजप्राणगते भृगौ ७४

लोकप्रकाशकीर्तिश्च सुतसौख्यविवर्जितः
उष्णादिरोगजं दुखं शुक्रप्राणगते रवौ ७५

देवार्चने कर्मरतिर्मन्त्रतोषणतत्परः
धनसौभाग्यसम्पत्तिः शुक्रप्राणगते विधौ ७६

ज्वरो मसूरिकास्फोटकण्डूचिपिटकादिकाः
देवब्राह्मणपूजा च शुक्रप्राणगते कुजे ७७

नित्यं शत्रुकृता पीडा नेत्रकुक्षिरुजादयः
विरोधः सुहृदां पीडा शुक्रप्राणगतेऽप्यहौ ७८

आयुरारोग्यमैश्वर्यं पुत्रस्त्रीधनवैभवम्
छत्रवाहनसंप्राप्तिः शुक्रप्राणगते गुरौ  ७९

राजोपद्रवजा भीतिः सुखहानिर्महारुजः
नीचैः सह विवादश्च भृगोः प्राणगते शनौ  ८०

सन्तोषो राजसम्मानं नानादिग्भूमिसम्पदः
नित्यमुत्साहवृद्धिः स्याच्छुक्रप्राणगते बुधे  ८१

जीवितात्मयशोहानिर्धनधान्यपरिक्षयः
त्यागभोगधनानि स्युः शुक्रप्राणगते ध्वजे  ८२

एवमृक्षदशानां हि सान्तराणां मया द्विज
फलानि कथितान्यत्र संक्षेपादेव तेऽग्रतः  ८३

## अथ कालचक्रान्तर्दशाफलाध्यायः  ६४

जगद्धिताय प्रोक्तानि पुरा यानि पुरारिणा
तानि चक्रान्तर्दशाफलानि कथयाम्यहम्  १

मेषांशे स्वान्तरे भौमे ज्वरश्च व्रणसम्भवः
बुधशुक्रेन्दुजीवेषु सुखं शत्रुभयं रवौ  २

वृषांशे स्वान्तरे सौरे कलहो रोगसम्भवः
विद्यालाभस्तनौ सौख्यं गुरौ तत्र गते फलम्  ३

देशत्यागो मृतिर्वापि शस्त्रघातो ज्वरोऽथवा
वृषभस्वांशके विप्र  कुजे तत्र गते फलम्  ४

वस्त्राभरणलाभश्च स्त्रीसुयोगो महत् सुखम्
शुक्रेन्दुसुतचन्द्रेषु वृषभस्वांशके फलम्  ५

नृपाद् भयं पितृमृतिः स्ववदाद्यैर्भयं रवौ
मिथुने स्वांशके शुक्रे धनवस्त्रसमागमः ६

पितृमातृमृतेर्भीतिर्ज्वरश्च व्रणसम्भवः
दूरदेशप्रयाणं च मिथुने स्वांशके कुजे ७

बुद्धिविद्याविवृद्धिश्च महाविभवसम्भवः
लोके मानश्च प्रीतिश्च मिथुने स्वांशके गुरौ ८

विदेशगमनं व्याधिर्मरणं धननाशनम्
बन्धुनाशोऽथवा विप्र मिथुने स्वांशके शनौ ९

विद्यावस्त्रादिलाभश्च दारपुत्रादिजं सुखम्
सर्वत्र मानमाप्नोति मिथुने स्वांशके बुधे १०

कर्क स्वांशगते चन्द्रे पुत्रदारसुखं महत्
ऐश्वर्यं लभते लोके मानं प्रीतिं तथैव च ११

शत्रुभ्यश्च पशुभ्यश्च भयं राजकुलात् तथा
आधिव्याधिभयं चैव कर्के स्वांशगते रवौ १२

पुत्रदारसुहृत्सौख्यं धनवृद्धिस्तथैव च
लोके मानं यशश्चैव कर्कांशे बुधशुक्रयोः १३

विषशस्त्रमृतेर्भीतिं ज्वररोगादिसम्भवाम्
पीडां चैव समाप्नोति कर्के स्वांशगते कुजे १४

विभवस्यातिलाभश्च शरीरेऽपि सुखं तथा
नृपात् सम्मानलाभश्च कर्के स्वांशगते गुरौ १५

वातव्याधिभयं घोरं सर्पवृश्चिकतो भयम्

नानाकष्टमवाप्नोति कर्के स्वांशगते शनौ १६

सिंहांशे स्वांशगे भौमे मुखरोगभयं दिशेत्
पित्तज्वरकृतां वाधां शस्त्रक्षतमथापि वा १७

धनवस्त्रादिलाभश्च स्त्रीपुत्रादिसुखं तथा
बुधभार्गवयोर्विप्र सिंहांशे स्वान्तरस्थयोः १८

उच्चात् पतनभीतिश्च स्वल्पद्रव्यसमागमः
विदेशगमनं चैव सिंहे स्वान्तर्गते विधौ १९

भयं शत्रुजनेभ्यश्च ज्वरादिव्याद्धिसम्भवः
ज्ञानहानिर्मृतेर्भीतिः सिंहे स्वान्तर्गते रवौ २०

धनधान्यादिलाभं च प्रसादं द्विजभूपयोः
विद्यावृद्धिमवाप्नोति सिंहे स्वान्तर्गते गुरौ २१

कन्यायां स्वांशगे सौरे कष्टं प्राप्नोति मानवः
द्रयाणं च ज्वरं चैव क्षुद्रवं वैक्लवं तथा २२

नृपप्रसादमैश्वर्यं सुहृद्बन्धुसमागमम्
विद्यावृद्धिमवाप्नोति कन्यायां स्वांशके गुरौ २३

पित्तज्वरभवा पीडा विदेशे गमनं तथा
शस्त्रघातोऽग्निभीतिश्च कन्यायां स्वान्तरे कुजे २४

भृत्यपुत्रार्थलाभश्च नानासुखसमागमः
बुधभार्गवचन्द्रेषु कन्यास्वांशगतेषु च २५

प्रयाणं रोगभीतिश्च कलहो बन्धुभिः सह
शस्त्रघातभयं चैव कन्यांशे स्वांशगे रवौ २६

तुले स्वान्तर्गते शुक्रे सद्बुद्धिश्च सुखोदयः
स्त्रीपुत्रधनवस्त्रादिलाभो भवति निश्चितः २७

पितृकष्टं सुहृद्वैरं शिरोरोगो ज्वरोदयः
विषशस्त्राग्निभीतिश्च तुले स्वान्तर्गते कुजे २८

द्रव्यरत्नादिलाभश्च धर्मकार्यं नृपादरः
सर्वत्र सुखसम्प्राप्तिस्तुले स्वांशगते गुरौ २९

प्रयाणं च महाव्याधिः क्षेत्रादेः क्षतिरेव च
शत्रुवाधा च कार्येषु तुले स्वांशगते शनौ च ३०

पुत्रजन्म धनप्राप्तिः स्त्रीसुखं च मनःप्रियम्
भाग्योदयश्च विज्ञेयस्तुले स्वान्तर्गते बुधे ३१

शशाङ्कबुधशुक्रेषु वृश्चिके स्वांशगेषु च
नानाधान्यधनप्राप्तिर्व्याधिविनाशो महत् सुखम् ३२

शत्रुक्षोभभयं व्याधिमर्थनाशं पितुर्भयम्
श्वापदाद् भयमाप्नोति वृश्चिके स्वांशगे रवौ ३३

वातपित्तभयं चैव मसूरीव्रणमादिशेत्
अग्निशस्त्रादिभीतिश्च वृश्चिके स्वांशगे कुजे ३४

धनं धान्यञ्च रत्नं च देवब्राह्मणपूजनम्
राजप्रसादमाप्नोति वृश्चिके स्वांशगे गुरौ ३५

धनबन्धुविनाशश्च जायते मानसी व्यथा
शत्रुवाधा महाव्याधिर्वृश्चिके स्वांशगे शनौ ३६

अतिदाहं ज्वरं छर्दि मुखरोगं विशेषतः

नानाक्लेशमवाप्नोति चापांशे स्वांशगे कुजे ३७

श्रियं विद्यां च सौभाग्यं शत्रुनाशं नृपात् सुखम्
भार्गवेन्दुचन्द्राणां चापे स्वस्वांशके दिशेत् ३८

भार्यावित्तविनाशं च कलहं च नृपाद् भयम्
दूरयात्रामवाप्नोति चापांशे स्वांशगे रवौ ३९

दानधर्मतपोलाभं राजपूजनमाप्नुयात्
भार्याविभवलाभं च चापे स्वांशगते गुरौ ४०

द्विजदेवनृपोद्भूतं कोपं बन्धुविनाशनम्
देशत्यागमवाप्नोति मकरस्वांशगे शनौ ४१

देवार्चनं तपोध्यानं सम्मानं भूपतेः कुले
भार्गवज्ञेन्दुजीवानां मृगांशेऽन्तर्दशाफलम् ४२

शिरोरोगं ज्वरं चैव करपादक्षतं दिशेत्
रक्तपित्तातिसारांश्च मृगस्वांशगते कुजे ४३

विनाशं पितृबन्धूनां ज्वररोगादिकं दिशेत्
नृपशत्रुभयं चैव मृगांशस्वांशगे शनौ ४४

नानाविद्यार्थलाभश्च पुत्रस्त्रीमित्रजं सुखम्
शरीरारोग्यमैश्वर्यं कुम्भे स्वांशगते भृगौ ४५

ज्वराग्निचोरजा पीडा शत्रुणां च महद् भयम्
मनोव्यथामवाप्नोति घटांशस्वान्तरे कुजे ४६

नैरुज्यं च सुखं चैव सम्मानं भूपतेः द्विजात्
मनःप्रसादमाप्नोति कुम्भांशस्वांशगे गुरौ ४७

धातुत्रयप्रकोपं च कलहं देशविभ्रमम्
क्षयव्याधिमवाप्नोति कुंभांशस्वांशगे शनौ ४८

पुत्रमित्रधनस्त्रीणां लाभं चैव मनःप्रियम्
सौभाग्यवृद्धिमाप्नोति कुम्भांशस्वांशगे बुधे ४९

विद्यावृद्धिमवाप्नोति स्त्रीसुखं व्याधिनाशनम्
सुहृत्सङ्गं मनःप्रीतिं मीनांशस्वांशगे विधौ ५०

बन्धुभिः कलहं चैव चौरभीतिं मनोव्यथाम्
स्थानभ्रंशमवाप्नोति मीनांशस्वांशगे रवौ ५१

रणे विजयमाप्नोति पशुभूमिसुतागमम्
धनवृद्धिश्च मीनांशे स्वांशयोर्बुधशुक्रयोः ५२

पित्तरोगं विवादञ्च स्वजनैरपि मानवः
शत्रुणां भयमाप्नोति मीनांशस्वांशगे कुजे ५३

धनवस्त्रकलत्राणां लाभो भूपसमादरः
प्रतिष्ठा बहुधा लोके मीनांशस्वांशगे गुरौ ५४

धननाशो मनस्तापो वेश्यादीनां च सङ्गमात्
देशत्यागो भवेद्वापि मीनांशस्वांशगे शनौ ५५

एवं प्राज्ञैश्च विज्ञेयं कालचक्रदशाफलम्
अन्तर्दशाफलं चैव वामर्क्षेऽप्येवमेव च ५६

इदं फलं मया प्रोक्तं धर्माऽधर्मकृतं पुरा
तत्सर्वं पाणिभिर्नित्यं प्राप्यते नाऽत्र संशयः ५७

सुहृदोऽन्तर्दशा भव्या पापस्यापि द्विजोत्तम

शुभस्यापि रिपोश्चैवमशुभा च प्रकीर्तिता ५८

## अथ कालचक्रनवांशदशाफलाध्यायः ६५

मेषे तु रक्तजा पीडा वृषभे धान्यवर्द्धनम्
मिथुने ज्ञानवृद्धिश्च कर्के धनपतिर्भवेत् १

सिंहभे शत्रुबाधा स्यात् कन्यायां स्त्रीजनात् सुखम्
तुलभे राजमन्त्रित्वं वृश्चिके मृत्युतो भयम् २

अर्थलाभो भवेच्चापे मेषस्य नवभागके
फलमेवं विजानीयाद्दशाकाले द्विजोत्तम ३

मकरे पापकर्माणि कुम्भे वाणिज्यतो धनम्
मीने सर्वार्थसिद्धिश्च वृश्चिके वह्नितो भयम् ४

तुलभे राजपूजा च कन्यायां शत्रुतो भयम्
कर्के पत्नीजने कष्टं सिंहभे नेत्रपीडनम् ५

मिथुने विषतो भीतिर्वृषस्य नवमांशके
वृषभे धनलाभः स्थान्मेषे तु ज्वरसंभवः ६

मीने च मातुलप्रीतिः कुम्भे शत्रुप्रवर्धनम्
मकरे चोरतो भीतिश्चापे विद्याविवर्धनम् ७

मेषे तु शस्त्रसंघातो वृषे तु कलहो भवेत्
मिथुने सुखमाप्नोति मिथुनांशे फलं त्विदम् ८

कर्कटे सुखमाप्नोति सिंहे भूपालतो भयम्
कन्यायां बन्धुतः सौख्यं तुलभे कीर्तिमाप्नुयात् ९

वृश्चिके च पितुः कष्टं चापे ज्ञानधनागमः

मकरे त्वयशो लोके कुम्भे वाणिज्यतः क्षतिः १०

मीने सुखमवाप्नोति कर्कांशे फलमीदृशम्
वृश्चिके कलहः पीडा तुलभे सुखसम्पदः ११

कन्यायां धनधान्यानि कर्के पशुगणाद् भयम्
सिंहे सुखं च दुःखं च मिथुने शत्रुवर्धनम् १२

वृषे च सुखसम्पत्तिः मेषे कष्टमवाप्नुयात्
मीने तु दीर्घयात्रा स्यात् सिंहांशे फलमीदृशम् १३

कुम्भभे धनलाभः स्यान्मकरेऽपि धनागमः
चापे भ्रातृजनात् सौख्यं मेषे मातृसुखं वदेत् १४

वृषभे पुत्रसौख्यं च मिथुने शत्रुतो भयम्
कर्के दारजनैः प्रीतिः सिंहे व्याधिविवर्धनम् १५

कन्यायां च सुतोत्पत्तिः कन्यांशे फलमीदृशम्
तुलभे धनसम्पत्तिर्वृश्चिके भ्रातृतः सुखम् १६

पितृवर्गसुखं चापे मातृकष्टं मृगे वदेत्
कुम्भे वाणिज्यतो लाभं मीने च सुखसम्पदम् १७

वृश्चिके च स्त्रियाः पीडा तुले च जलतो भयम्
कन्यायां सुखसम्पत्तिस्तुलांशे फलमीदृशम् १८

कर्कभे धनहानिः स्यात् सिंहे भूपालतो भयम्
मिथुने भूमिलाभश्च वृशभे धनसम्पदः १९

मेषे तु रक्तजा पीडा मीने च सुखमादिशेत्
कुम्भे वाणिज्यतो लाभो मकरे च धनक्षितः २०

चापे च सुखसम्पत्तिर्वृश्चिकांशे फलं त्विदम्
मेषे च धनलाभः स्यात् वृषे भूमिविवर्द्धनम्  २१

मिथुने सर्वसिद्धिः स्यात् कर्कभे सुखसम्पदः
सिंहे सर्वसुखोत्पत्तिः कन्यायां कलहागमः  २२

तुले वाणिज्यतो लाभो वृश्चिके रोगजं भयम्
चापे पुत्रसुखं वाच्यं धनुरंशे फलं त्विदम्  २३

मकरे पुत्रलाभः स्यात् कुम्भे धनविवर्धनम्
मीने कल्याणमाप्नोति वृश्चिके पशुतो भयम्  २४

तुलभे त्वर्थलाभः स्यात् कन्यायां शत्रुतो भयम्
कर्कटे श्रियमाप्नोति सिंहे शत्रु जनाद् भयम्  २५

मिथुने विषतो भीतिर्मृगांशे फलमीदृशम्
वृशभे धनसम्पत्तिर्मेषे नेत्ररुजो भयम्  २६

मीनभे दीर्घयात्रा स्यात् कुम्भे धनविवर्धनम्
मकरे सर्वसिद्धिः स्याच्चापे ज्ञानविवर्धनम्  २७

मेषे सौख्यविनाशः स्यात् वृषभे मरणं भवेत्
मिथुने सुखसम्पत्तिः कुम्भांशे फलमीदृशम्  २८

कर्कटे धनवृद्धिः स्यात् सिंहे राजाश्रयं वदेत्
कन्यायां धनधान्यानि तुले वाणिज्यतो धनम्  २९

वृश्चिके ज्वरजा पीडा चापे ज्ञानसुखोदयः
मकरे स्त्रीविरोधः स्यात् कुम्भे च जलतो भयम्  ३०

मीने तु सर्वसौभाग्यं मीनांशे फलमीदृशम्

दशाद्यंशक्रमेणैव ज्ञात्वा सर्वफलं वदेत्  ३१

क्रूरग्रहदशाकाले शान्तिं कुर्याद् विधानतः
ततः शुभमवाप्नोति तद्दशायां न संशयः  ३२

अथाष्टकवर्गाध्यायः  ६६

भगवन्  भवताख्यातं ग्रहभावादिजं फलम्
बहुनामृषिवर्याणामाचार्याणां च सम्मतम्  १

संकरात् तत्फलानां च ग्रहाणां गतिसङ्करात्
इत्थमेवेति नो सर्वे ज्ञात्वा वक्तुमलं नराः  २

कलौ पापरतानां च मन्दा बुद्धिर्युतो नृणाम्
अतोऽल्पबुद्धिगम्यं यत् शास्त्रमेतद् वदस्व मे  ३

तत्तत्कालग्रहस्थित्या मानवानां परिस्फुटम्
सुखदुःखपरिज्ञानमायुषो निर्णयं तथा  ४

साधु पृष्टं त्वया ब्रह्मन्  कथयामि तवाग्रतः
लोकयात्रापरिज्ञानमायुषो निर्णयं तथा  ५

संकरस्याविरोधञ्च शास्त्रस्यापि प्रयोजनम्
जनानामुपकारार्थं सावधानमनाः शृणु  ६

लग्नादिव्ययपर्यन्तं भावा संज्ञानुरूपतः
फलदाः शुभसंदृष्टा युक्ता वा शोभना मताः  ७

ते तूच्चादिभगैः खेटैर्न चास्तारिभनीचगैः
पापैर्दृष्टयुता भावाः कल्याणेतरदायकाः  ८

तैरःतारिभनीचस्थैर्न च मित्रस्वभोच्चगैः

एवं समान्यतः प्रोक्तं होराशास्त्रज्ञसूरिभिः ९

मयैयत् सकलं प्रोक्तं पूर्वाचार्यानुवर्तिना
स्रायुश्च लोकयात्रां च शास्त्रस्यास्यते प्रयोजनम् १०

निश्चेतुं तन्न सक्नोति वसिष्ठो वा बृहस्पतिः
किं पुनर्मनुजास्तत्र विशेषात्तु कलौ युगे ११

सामान्यांशो विशेषांशो ज्योतिःशास्त्रं द्विधोदितम्
प्रोक्तः सामान्यभागस्तु निश्चयांशस्तु कथ्यते १२

यथा लग्नाच्च चन्द्राच्च ग्रहाणां भावजं फलम्
तथाऽन्येभ्योऽपि खेटेभ्यो विचिन्त्यं दैवविद्वरैः १३

स्रतो रव्यादिखेटानां सलग्नानां पृथक् पृथक्
स्रष्टानां सर्वभावोत्थं यथोक्तमशुभं शुभम् १४

ज्ञात्वादौ करणं स्थानं बिन्दुरेखोपलक्षितम्
क्रमादष्टकवर्गस्य वाच्यं स्पष्टफलं यथा १५

तनुस्वायुस्त्रिरिष्फेषु पञ्च कामे सुखेऽर्णवाः
स्ररौ भाग्ये त्रयः पुत्रे षट् करौ खे भवे च भूः १६

लग्नेन्दुजीवशुक्रज्ञास्तनौ स्वे मरणेऽपि च
रविभौमार्कि चन्द्रार्या व्यये ज्ञेन्दुसितायकाः १७

सुखे होरेन्दुशुक्राश्च धर्मेऽर्कार्किकुजा स्ररौ
होराज्ञार्येन्दवः कामे भवे दैत्येन्द्रपूजितः १८

सहजेऽर्कार्किशुक्रार्यभौमाः खे गुरुभार्गवौ
सुतेऽर्कार्कीन्दुलग्नारशुक्राः स्युः करणं रवेः १९

भाग्यस्वयोश्च षड् वेश्ममृतिहोरासु पञ्च च
मानदुश्चिक्ययोरेकः सुते वेदा अरिस्त्रियोः २०

त्रयो व्ययेष्टावाये च शून्यं शीतकरस्य तु
होरार्कारार्किभृगवोङ्गज्ञार्केन्द्वार्किभार्गवाः २१

जीवोर्कार्कीन्दुलग्नारा होरेन्दुगुरुभास्कराः
सितज्ञार्याः कुजतनुमन्दास्ते सितशीतगू २२

होरार्कारार्किविज्जीवाः शनिः खं सकलाः क्रमात्
व्ययवेश्मसुतस्त्रीषु षड् सप्त धनधर्मयोः २३

होरामृत्व्योः शरा वेदा विक्रमे खे त्रयः च्ते
द्वौ भवे शून्यमेवं स्यात् करणं भूमिजस्य तु २४

कुजस्यार्केन्दुविज्जीवसिता लग्नशनी च तु
सितारगुरुमन्दाः स्युर्धर्मोक्तेषु कुजं विना २५

चन्द्रारगुरुशुक्रार्किलग्नानि कुजभास्करी
ज्ञेन्द्वर्कसितलग्नार्या एषु शुक्रं विना ततः २६

विना शनिं सप्त धर्मे सितेन्दुज्ञा वियत्ततः
अर्कार्किज्ञेन्दुलग्नाराः करणं प्रोच्यते क्रमात् २७

तनुस्वगृहकर्मारिधर्मेष्वग्निर्मृतौ करौ
भ्रातृस्त्रियो रसा लाभे शून्यं पुत्रे व्यये शराः २८

बुधास्यर्केन्दुगुरवो गुरुसूर्यबुधाः क्रमात्
लग्नार्कारार्किचन्द्रार्या ज्ञार्कार्या हि बुधस्य तु २९

जीवारेन्द्वार्किलग्नानि शुक्रमन्नधरासुताः

ज्ञेन्दुलग्नार्कशुक्रार्या ज्ञार्कौ जीवेन्दुलग्नकाः ३०

अर्कार्यशुक्रः शून्यं च होरेन्द्वारार्किभार्गवाः
रूपं धनाययोः खे द्वौ व्यये सप्त च्तेऽर्णवाः ३१

मृतिविक्रमयो पञ्च गुरोः शेषेषु वह्नयः
लग्ने शुक्रेन्दुमन्दाः स्वे आये मन्दश्च विक्रमे ३२

लग्नारेन्दुज्ञभृगवः सुतेर्कार्यकुजा गृहे
शुक्रमन्देन्दवो द्यूने बुधशुक्रशनैश्चराः ३३

जीवारार्केन्दवः शत्रौ सर्वे मन्दं विना व्यये
कर्मणीन्दुशनी धर्मे मन्दारगुरवो मृगौ ३४

लग्नार्किसितचन्द्रज्ञाः करणं च गुरोरिदम्
सुतायुर्विक्रमेष्वद्गि तनुस्वव्ययखेष्विषुः ३५

अष्टौ स्त्रियामरौ षड् भूर्धर्मे मित्रेऽद्गि खं भवे
लग्ने स्वेऽर्कारविज्ञीवमन्दाः सर्वे च कामभे ३६

अर्कार्यौ विक्रमस्थाने सुतेऽर्कारौ शुभे रविः
सुखेऽकबुधजीवाः स्युर्भौमज्ञौ मृतिभे द्वज ३७

शुक्रार्केन्द्वार्किलग्नार्याः शत्रौ शून्यं भवे व्यये
होरार्किबुधशुक्रार्यास्तन्वारज्ञेन्द्विनाश्च खे ३८

स्वस्त्रीधर्मेषु सप्ताङ्कं मृतिहोरागृहेषु च
आज्ञाभ्रातृव्यये वेदा रूपं शत्रौ सुते शराः ३९

आये शून्यं शनेरेवं करणं प्रोच्यते बुधैः
गृहे तनौ च लग्नार्कौ स्वस्त्रियोश्च रविं विना ४०

हित्वा धर्मे बुधं माने लग्नाररविचन्द्रजान्
ततो भ्रातरि जीवार्कबुधशुक्राः क्षते रविः ४१

व्यये लग्नेन्दुमन्दार्काः सितार्केन्दुज्ञलग्नकाः
सुते मृतौ बुधार्कौ च हित्वाये खं शनेर्विदः ४२

उक्ताऽन्ये स्थानदातार इति स्थानं विदुर्बुधाः
अथ स्थानग्रहान् वक्ष्ये सुखबोधाय सुरिणाम् ४३

स्वायुस्तनुषु मन्दारसूर्या जीवबुधौ सुते
विक्रमे ज्ञेन्दुलग्नानि लग्नार्कार्किकुजा गृहे ४४

ते च ज्ञेन्दू खभे चाये सर्वे शुक्रं विना व्यये
लग्नशुक्रबुधाः शत्रौ ते च जीवसुधाकरौ ४५

द्यूनेऽर्कारार्किशुक्राश्च धर्मेऽर्कारार्किविद्गुरुः
ज्ञेन्दुजीवाः कुजार्यौ ज्ञार्केन्द्वारार्कितनूशनाः ४६

जीवशुक्रबुधा भौमबुधशुक्रशनैश्चराः
रवीन्द्वारार्किलग्नानि रवीन्द्वार्यज्ञभार्गवाः ४७

अर्कज्ञजीवाः शुक्रेन्दू ते च तौ लग्नभूसुतौ
सर्वे शून्यं क्रमात्प्रोक्तं स्थानं शीतकरस्य च ४८

लग्नमन्दकुजा भौमो होराज्ञेन्दुदिनाधिपाः
मन्दारौ ज्ञरवी ज्ञेन्दुजीवार्कतनुभार्गवाः ४९

मन्दारौ तौ सित श्चार्किः कुजार्कार्यार्किलग्नकाः
सर्वे गुरुसितौ स्थानं भौमस्यैवं विदुर्बुधाः ५०

लग्नमन्दारशुक्रज्ञा लग्नारेन्दुसितार्कजाः

शुक्रज्ञौ लग्नचन्द्रार्किसितारा ज्ञार्कभार्गवाः ५१

जीवज्ञार्केन्दुलग्नानि भूमिपुत्रशनैश्चरौ
तौ च लग्नेन्दु शक्रार्या मन्दारार्कज्ञभार्गवाः ५२

लग्नमन्दारविच्चन्द्राः सर्वे जीवज्ञभास्कराः
गुरोर्लग्ने सुखे जीव लग्नारार्कबुधा धने ५३

चन्द्रशुक्रौ च दुश्चिक्ये मन्दार्यार्काः शनिर्व्यये
सुते शुक्रेन्दुलग्नज्ञमन्दाश्चन्द्रं विना त्वरौ ५४

लग्नारार्याऽर्केन्दवोऽस्ते मृतौ जीवार्कभूसुताः
धर्मे शुक्रार्कलग्नेन्दुबुधा मन्दं विनायभे ५५

माने गुरुबुधारार्कशुक्रहोरास्तथा विदुः
लग्नशुक्रेन्दव स्ते ते ज्ञार्क्या रास्ते ज्ञवर्जिताः ५६

सुतभे लग्नशशिजशशाङ्कार्यार्किभार्गवाः
ज्ञारौ शून्यं सिताऽर्केन्दुगुरुलग्नशनैश्चराः ५७

सर्वे रविं विना शुक्रगुरुमन्दाश्च मानभे
सर्वे कुजेन्दुरवयः क्रमाद्भृगुसुतस्य च ५८

शने रवितनू सूर्यो लग्नेन्दुकुजसूर्यजाः
लग्नार्कौ जीवमन्दाराः सर्वे सूर्यं विना व्ययते ५९

अर्कोऽर्कज्ञौ बुधोऽर्कारतनुज्ञाः सकलास्ततः
कुजज्ञगुरुशुक्राश्च क्रमात् स्थानमिदं विदुः ६०

तनौ तुर्ये च वह्निः स्याद् दुश्चिक्ये द्वौ धने शराः
बुद्धिमृत्यंकरिःफेषु षट् खेशव्ययतराशिषु ६१

रूपंस्त्रियां गुरुं त्यक्त्वा लग्नस्य करणं त्विदम्
होरासूर्येन्दवो लग्ने लग्नारेन्द्विनसूर्यजाः ६२

गुरुज्ञौ लग्नचन्द्रारा लसूचंमंबुसौरयः
ज्ञते शुक्रस्तथा चैकः कामे सर्वे गुरुं विना ६३

मृगौ भृगुबुधौ त्यक्त्वा धर्मे गुरुसितौ विना
कर्मण्याये तथा शुक्रोऽव्यये सूर्येन्दुवर्जिताः ६४

लग्नस्येदं तु संप्रोक्तं करणं द्विजपुङ्गव
अथ स्थानं प्रवक्ष्यामि लग्नस्य द्विजपुङ्गव ६५

आर्किज्ञशुक्रगुर्वाराः सौम्यदेवेज्यभार्गवाः
हित्वा सौम्यगुरू शेषाः सूज्ञेज्यभृगुसूर्यजाः ६६

तथा जीवभृगू बुद्धौ सर्वे शुक्रं विना ज्ञते
जीव एकस्तथा द्यूने मृतौ सौम्यभृगू तथा ६७

धर्मे गुरुसितावेव खे भवे शुक्रमन्तरा
सूर्यचन्द्रौ तथा रिष्फे स्थानं लग्नस्य कीर्तितम् ६८

करणं बिन्दुवत् लेख्यं स्थानं रेखास्वरूपकम्
करणं त्वशुभदं प्रोक्तं स्थानं शुभफलप्रदम् ६९

दशारेखा लिखेदूर्ध्वास्तिर्यग् रेखाश्चतुर्दश
नगेशकोष्ठसंयुक्तं चक्रमेवं प्रजायते ७०

तिर्यगष्टसु कोष्ठेषु विलग्नसहितान् खगान्
आद्येषूर्ध्वाधरेष्वेवं भावसंख्या लिखेद् बुधः ७१

यथोक्तं विन्यसेत् तत्र करणं स्थानमेव वा

ततः शुभाऽशुभं ज्ञात्वा जातकस्य फलं वदेत्  ७२

## अथ त्रिकोणशोधनाध्यायः  ६७

एवं सलग्नखेटानां विधायाष्टकवर्गकम्
त्रिकोणशोधनं कुर्यादादौ सर्वेषु राशिषु  १

त्रिकोणं कथ्यते विप्र  मेषसिंहधनूंष्यथ
वृषकन्यामृगास्याश्च युग्मतौलिघटास्तथा  २

कर्कवृश्चिकमीनाश्च त्रिकोणाः स्युः परस्परम्
अधोऽधः सर्वराशीनामष्टवर्गफलं न्यसेत्  ३

त्रिकोणेषु च यन्नयूनं तत्तुल्यं त्रिषु शोधयेत्
एकस्मिन् भवने शून्यं तत् त्रिकोणं न शोधयेत्  ४

समत्वे सर्वगेहेषु सर्वं संशोधयेद् बुधः
पश्चात् विपश्चिता कार्यमेकाधिपतिशोधनम्  ५

## अथैकाधिपत्यशोधनाध्यायः  ६८

पूर्वं त्रिकोणं संशोध्य राशीनां स्थापयेत् फलम्
पृथक् पृथक् ततः कुर्यादेकाधिपतिशोधनम्  १

क्षेत्रद्वये फलानि स्युस्तदा संशोधयेद् यथा
क्षीणेन सह चान्यस्मिन् शोधयेद् ग्रहवर्जिते  २

उभयोर्ग्रहसंयोगे न संशोध्यः कदाचन्
ग्रहयुक्ते फलैर्हीने ग्रहाभावे फलाधिके  ३

ऊनेन सममन्यस्मिन् शोधयेद् ग्रहवर्जिते
फलाधिके ग्रहैर्युक्ते चान्यस्मिन् सर्वमुत्सृजेत्  ४

उभयत्र ग्रहभावे समत्वे सकलं त्यजेत्
सग्रहाग्रहयोस्तुल्ये सर्वं संशोध्यमग्रहे ५

कुलीरसिंहयो राश्योः पृथक् क्षेत्रं पृथक् फलम्
संशोध्यैकाधिपत्यं हि ततः पिण्डं प्रसाधयेत् ६

अथ पिण्डसाधनाध्यायः ६९

एवं शोध्यावशेषाङ्कं राशिमानेन वर्द्धयेत्
ग्रहयुक्ते च तद्राशौ ग्रहमानेन वर्द्धयेत् १

सर्वेषां च पुनर्योगः पिण्डाख्यः कथ्यते द्विज
गोसिंहौ दशभिर्गुण्यौ वसुभिर्युग्मवृश्चिकौ २

सप्तभिस्तुलमेषौ च मृगकन्ये च पञ्चभिः
शेषाः स्वसंख्यया गुण्या ग्रहमानमथोच्यते ३

जीवारशुक्रसौम्यानां दशाष्टनगसायकाः
पञ्च शेषग्रहाणां च मानं प्रोक्तमिदं क्रमात् ४

अथाऽष्टकवर्गफलाध्यायः ७०

आत्मस्वभावशक्तिश्च पितृचिन्ता रवेः फलम्
मनोबुद्धिप्रसादश्च मातृचिन्ता मृगाङ्कतः १

भ्रातृसत्त्वं गुणं भूमिं भौमेनैव विचिन्तयेत्
वाणिज्यकर्म वृत्तिश्च सुहृदं च बुधेन तु २

गुरुणा देहपुष्टिञ्च विद्या पुत्रार्थसम्पदः
भृगोर्विवाहकर्माणि भोगस्थान च वाहनम् ३

वेश्यास्त्रीजनसंयोगं शुक्रेण च निरीक्षयेत्
आयुश्च जीवनोपायं दुःखशोक भयानि च ४

सर्वक्षयं च मरणं मन्देनैव निरीक्षयेत्
तत्तद्भावफलाङ्केन गुणयेद् योगपिण्डकम्  ५

सप्तविंशोधृतं शेषतुल्यर्क्षे याति भानुजः
यदा तदा तस्य तस्य भावस्यार्ति विनिर्दिशेत्  ६

अर्काश्रितर्क्षान्नवमो राशिः पितृ गृहं स्मृतम्
तद्राशिफलसंख्याभिर्वर्धयेद् योगपिण्डकम्  ७

विभजेत् सप्तविंशत्या शेषर्क्षे याति भानुजः
यदा तदा पितृक्लेशो भवतीति न संशयः  ८

तत्त्रिकोणगते वापि पिता पितृसमोऽपि वा
मरणं तस्य जानीयात् पीडां वा महतीं वदेत्  ९

गुणयेद् योगपिण्डं वा तद्राशिफलसंख्यया
अर्कोद्धृतावशेषर्क्षे यदा गच्छति भानुजः  १०

तत्त्रिकोणर्क्षकं वापि पितृकष्टं तदा वदेत्
रिष्टप्रददशायां तु मरणं कष्टमन्यदा  ११

अर्कात्तु तुर्यगे राहौ मन्दे वा भूमिनन्दने
गुरुशुक्रेक्षणमृते पितृहा जायते नरः  १२

लग्नात् चन्द्राद् गुरुस्थाने याते सूर्यसुतेऽथवा
पापैर्दृष्टे युते वापि पितृनाशं वदेद् बुधः  १३

लग्नात् सुखेश्वरारिष्टदशाकाले पितृक्षयः
अनुकूलदशाकाले नेति चिन्त्यं विचक्षणैः  १४

पितृजन्माष्टमे जातस्तदीशे लग्नगेऽपि वा

करोति पितृकार्याणि स एवात्र न संशयः १५

सुखनाथदशायान्तु सुखप्राप्तेश्च संभवः
सुखेशे लग्नलाभस्थे चन्द्रस्थानाद् विशेषतः
पितृगेहसमायुक्ते जातः पितृवशानुगः १६

पितृजन्मतृतीयर्क्षे जातः पितृधनाश्रितः
पितृकर्मगृहे जातः पितृतुल्यगुणान्वितः १७

तदीशे लग्नसंस्थेऽपि पितृश्रेष्ठो भवेन्नरः
एवं पूर्वोक्तसामान्यफलं चात्रापि चिन्तयेत् १८

सूर्याष्टवर्गे यन्छून्यं तन्मासे वस्तरेऽपि च
विवाहव्रतचूडादि शुभकर्म परित्यजेत् १९

यत्र रेखाधिका तत्र मासे संवत्सरेऽपि च
अनिष्टेऽपि रवौ जीवे शुभकर्म समाचरेत् २०

एवं चन्द्राष्टवर्गे च यत्र शून्यं भवेद् बहु
तत्र तत्र गते चन्द्रे शुभं कर्म परित्यजेत् २१

चन्द्राच्चतुर्थो मातृप्रासादग्रामचिन्तनम्
चन्द्रात् सुखफलात्पिण्डं वर्द्धयेद् भैश्च सम्भजेत् २२

शेषमृक्षं शनौ याते मातृहानिं विनिर्दिशेत्
तत्त्रिकोणगते चापि शनौ मातृरुजं वदेत् २३

भौमाष्टवर्गे संचिन्त्यं भ्रातृविक्रमधैर्यकम्
कुजाश्रितात् तृतीयर्क्षं बुधैर्भ्रातृगृहं स्मृतम् २४

त्रिकोणशोधनं कृत्वा यत्र स्यादधिकं फलम्

भूमेर्लाभोऽत्र भार्याया भ्रातॄणां सुखमुत्तमम्  २५

भौमो बलविहीनश्चेद् दीर्घायुर्भ्रातृको भवेत्
फलानि यत्र क्षीयन्ते तत्र भौमे गते क्षतिः  २६

तृतीयर्क्षफलेनाथ पिण्डं सम्बर्ध्य पूर्ववत्
शेषमृक्षं शनौ याते भ्रातृकष्टं विनिर्दिशेत्  २७

बुधात्तुर्ये कुटुम्बं च मातुलं मित्रमेव च
बुधे फलाधिके राशौ गते तेषां सुखं दिशेत्  २८

बुधाष्टवर्गं संशोध्य शेषमृक्षं गते शनौ
कष्टं कुटुम्बमित्राणां मातुलानां च निर्दिशेत्  २९

जीवात् पञ्चमतो ज्ञानं धर्मं पुत्रं च चिन्तयेत्
तस्मिन् फलाधिके राशौ सन्तानस्य सुखं दिशेत्  ३०

बृहस्पतेः सुतस्थाने फलं यत्संख्यकं भवेत्
शत्रुनीचग्रहं त्यक्त्वा तावती सन्ततिर्ध्रुवा  ३१

सुतभेशनवांशैश्च तुल्या वा सन्ततिर्भवेत्
सुतभावफलेनैवं पिण्डं संगुण्य पूर्ववत्  ३२

पुत्रकष्टं विजानीयात् शेषमृक्षं गते शनौ
एवं धर्मं च विद्यां च कल्पयेत् कालचित्तमः  ३३

शुक्रस्याकष्टवर्गं च निक्षिप्याकाशचारिषु
यत्र यत्र फलानि स्युर्भूयांसि किल तत्र तु  ३४

वित्तं कलत्रं भूमिं च तत्तद्देशाद् विनिर्दिशेत्
शुक्राज्ञामित्रतो दारलब्धिश्चिन्त्या विचक्षणैः  ३५

जामित्रतत्त्रिकोणस्थराशिदिग्देशसम्भवा
सुखेदुःखे स्त्रियाश्चिन्त्ये पिण्डं सम्वर्ध्य पूर्ववत् ३६

शनैश्चराश्रितस्थानादष्टमं मृत्युभं स्मृतम्
तदेव चायुषः स्थानं तस्मादायुर्विचिन्तयेत् ३७

लग्नात्प्रभृति मन्दान्तं फलान्येकत्र कारयेत्
तद्योगफलतुल्याब्दे व्याधिं वैरं समादिशेत् ३८

एवं मन्दादिलग्नान्तं फलान्येकत्र योजयेत्
तत्तुल्यवर्षे जातस्य तस्य व्याधिभयं वदेत् ३९

द्वयोर्योगसमे वर्षे कष्टं मृत्युसमं दिशेत्
दशारिष्टसमायोगो मृत्युरेव न संशयः ४०

पिण्डं संस्थाप्य गुणयेत् शनेरष्टमगैः फलैः
सप्तविंशतिहृच्छेषतुल्यमृक्षं गते शनौ ४१

तत्त्रिकोणर्क्षगे वापि जातकस्य मृतिं वदेत्
अर्कहृच्छेषराशौ वा तत्त्रिकोणेऽपि तद् वदेत् ४२

शनैश्चराष्टवर्गेषु यत्र नास्ति फलं गृहे
तत्र नैव शुभं तस्य यदा याति शनैश्चरः ४३

यत्र राशौ शुभाधिक्यं तत्र याते शनैश्चरे
जातकस्य ध्रुवं ज्ञेयं तस्मिन् काले शुभं फलम् ४४

## अथाऽष्टवर्गायुर्दायाध्यायः ७१

अथात्रायुः प्रवक्ष्येऽहमष्टवर्गसमुद्भवम्
दिनद्वयं विरेखायां रेखायां सार्धवासरम् १

दिनमेकं द्विरेखायां त्रिरेखायां दिनार्धकम्
वेदतुल्यासु रेखासु सार्धसप्तदिनं स्मृतम् २

द्विवर्षं पञ्चरेखासु षड्रेखासु चतुःसमा
षड्वर्षं सप्तरेखासु वसवोऽष्टासु वत्सराः ३

एवं यदागतायुः स्यात् सर्वखेटसमुद्भवम्
तदर्धं स्फुटमायुः स्यादष्टवर्गभवं नृणाम् ४

## अथ समुदायाष्टकवर्गाध्यायः ७२

द्वादशारं लिखेच्चक्रं जन्मलग्नादिभिर्युतम्
सर्वाष्टकफलान्यत्र संयोज्य प्रतिभं न्यसेत् १

समुदायाभिधानोऽयमष्टवर्गः प्रकथ्यते
अतः फलानि जातानां विज्ञेयानि द्विजोत्तम २

त्रिंशाधिकफला ये स्यू राशयस्ते शुभप्रदाः
पञ्चविंशादित्रिंशान्तफला मध्यफला स्मृताः ३

अतः क्षीणफला ये ते राशयः कष्टदुःखदा
शुभे श्रेष्ठफलान् राशीन् योजयेन्मतिमान्नरः ४

कष्टराशीन् सुकार्येषु वर्जयेद् द्विजसत्तम
श्रेष्ठराशिगतः खेटः शुभोऽन्यत्राऽशुभप्रदः ५

तन्वादिव्ययपर्यन्तं दृष्ट्वा भावफलानि वै
अधिके शोभनं ज्ञेयं हीने हानिं विनिर्दिशेत् ६

मध्ये मध्यफलं ब्रूयाद् तत्तद्भावसमुद्भवम्
मध्यात् फलाधिके लाभो लाभात् क्षीणगतोव्ययः ७

लग्नं फलाधिकं यस्य भोगवानर्थवान् हि सः
विपरीतेन दारिद्र्यं भवत्येव न संशयः ८

दशावदिह भावानां कृत्वा खंडत्रयं बुधः
पश्येत् पापसमारूढं खंडे कष्टकरं वदेत् ९

सौम्यैर्युक्तं शुभं ब्रूयान्मिश्रैर्मिश्रफलं यथा
क्रमाद् बाल्याद्यवस्थासु खंडत्रयफलं वदेत् १०

रेखाभिः सप्तभिर्युक्ते मासेमृत्युभयं नृणाम्
सुवर्णं विंशतिपलं दद्यात् द्वौ तिलपर्वतौ ११

रेखाभिरष्टभिर्युक्ते मासे मृत्युबशो नरः
असत्फलविनाशाय दद्यात् कर्पूरजां तुलाम् १२

रेखाभिर्मवभियुक्ते मासे सर्पभयं वदेत्
अश्वैश्चतुर्भिः संयुक्तं रथं दद्याच्छुभाप्तये १३

रेखाभिर्दशभिर्युक्ते मासे शस्त्रभयं तथा
दद्याच्छुभफलावाप्त्यै कवचं वज्रसंयुतम् १४

अभिशापभयं यत्र रेखा रुद्रसमा द्विज
दिक्पलस्वर्णघटितां प्रदद्यात् प्रतिमां विधोः १५

युक्ते द्वादशरेखाभिर्जले मृत्युभयं वदेत्
सशस्यभूमिं विप्राय दत्वा शुभफलं भवेत् १६

विश्वप्रमितरेखाभिर्व्याघ्रान्मृत्युभयं तथा
विष्णोर्हिरण्यगर्भस्य दानं कुर्याच्छुभाप्तये १७

शत्रप्रमितरेखाभिर्युक्ते मासे मृतेर्भयम्

वराहप्रतिमां दद्यात् कनकेन विनिर्मिताम्  १८

तिथितिश्च नृपाद् भीतिर्दद्यात् तत्र गजं द्विज
रिष्टं षोडशभिर्दद्यात् मूर्तिं कल्पतरोस्तथा  १९

सप्तेन्दुभिर्व्याधिभयं दद्यात् धेनुं गुडं तथा
कलहोऽष्टेन्दुभिर्दद्याद् रत्नगोभूहिरण्यकम्  २०

अङ्केन्दुभिः प्रवासः स्याच्छान्तिं कुर्याद् विधानतः
विंशत्या बुद्धिनाशः स्याद् गणेशं तत्र पूजयेत्  २१

रोगपीडैकविंशत्या दद्याद् धान्यस्य पर्वतम्
यमाश्विभिर्बन्धुपीडा दद्यादादर्शकं द्विज  २२

त्रयोविंशतिसंयुक्ते मासे क्लेशमवाप्नुयात्
सौवर्णीं प्रतिमां दद्याद्रवेः सप्तपलैर्बुधः  २३

वेदाश्विभिर्बन्धुहीनो दद्याद् गोदशकं नृपः
सर्वरोगविनाशार्थं जपहोमादिकं चरेत्  २४

धीहानिः पञ्चविंशत्या पूज्या वागीश्वरी तदा
षड्विंशत्याऽर्थहानिः स्यात् स्वर्णं दद्याद्विचक्षणः  २५

तथा च सप्तविंशत्या श्रीसुक्तं तत्र संजपेत्
अष्टविंशतिसंयुक्ते मासे हानिश्च सर्वथा  २६

सूर्यहोमश्च विधिना कर्त्तव्यः शुभकांक्षिभिः
एकोनत्रिंशता चापि चिन्ताव्याकुलितो भवेत्  २७

घृतवस्त्रसुवर्णानि तत्र दद्यात् विचक्षणः
त्रिंशता पूर्णधान्याप्तिरिति जातकनिर्णयः  २८

त्रिंशाधिकामी रेखाभिर्धनपुत्रसुखाप्तयः
चत्वारिंशाधिकाभिश्च पुरायश्रीरुपचीयते २९

अष्टवर्गेण ये शुद्धास्ते शुद्धाः सर्वकर्मसु
अतोऽष्टवर्गसंशुद्धिरन्वेष्या सर्वकर्मसु ३०

तावद्गोचरमन्वेष्यं यावन्न प्राप्यतेऽष्टकम्
अष्टवर्गे तु सम्प्राप्ते गोचरं विफलं भवेत् ३१

अथ रश्मिफलाध्यायः ७३

अथ रश्मीन् प्रवक्ष्यामि ग्रहाणां द्विजसत्तम
दिङ्नवेष्विषुसप्ताष्टशराः स्वोच्चे करो रवेः १

नीच खं चान्तरे प्रोक्ता रश्मयश्चानुपाततः
नीचोनं तु ग्रहं भार्धाधिकं चक्राद्विशोधयेत् २

स्वीयरश्मिहतं षड्भिर्भजेत् स्यू रश्मयः स्वकाः
अपरैरत्र संस्कारविशेषः कथितो यथा ३

स्वोच्चभे ते त्रिगुणिताः स्वत्रिकोणे द्विसंगुणाः
स्वमे त्रिघ्ना द्विसंभक्ता अधिमित्रगृहे तथा ४

वेदघ्ना रामसंभक्ता मित्रमे षड्गुणास्ततः
पञ्चभक्तास्तथा शत्रुगृहे चेद् दलिताः कराः ५

अधिशत्रुगृहे द्विघ्नाः पञ्चभक्ताः समे समाः
शनिशुक्रौ विना ताराग्रहा अस्ते गता यदि ६

विरश्मयो भवन्त्येवं ज्ञेयाः स्पष्टकरा द्विज
रश्मियोगवशादेवं फलं वाच्यं विचक्षणैः ७

एकादि पञ्चपर्यन्तं रश्मिसंख्या भवेद्यदि
दरिद्रा दुःखसंतप्ता अपि जाताः कुलोत्तमे ८

परतो दशकं यावत् निर्धना भारवाहकाः
स्त्रीपुत्रगृहहीनाश्च जायन्ते मनुजा भुवि ९

अकादशस्वल्पपुत्राः स्वल्पवित्ताश्च मानवाः
द्वादशस्वल्पवित्ताश्च धूर्ता मूर्खाश्च निर्बलाः १०

चौर्यकर्मरता नित्यं चेत् त्रयोदश रश्मयः
चतुर्दशसु धर्मात्मा कुटुम्बानां च पोषकाः ११

कुलोचितक्रियासक्तो धनविद्यासमन्वितः
रश्मिभिः पञ्चदशभिः सर्वविद्यागुणान्वितः १२

स्ववंशमुख्यो धनवानित्याह भगवान् विधिः
परतश्च कुलेशाना बहुभृत्या कुटुम्बिनः १३

कीर्तिमन्तो जनैः पूर्णाः सर्वे च सुखिनः क्रमात्
पञ्चाशज्जनपालश्चेदेकविंशतिरश्मयः १४

दानशीलः कृपायुक्तो द्वाविंशतिसुरश्मिषु
सुखयुक् सौम्यशीलश्चेत् त्रयोविंशतिरश्मयः १५

आत्रिंशत् परतः श्रीमान् सर्वसत्त्वसमन्वितः
राजप्रियश्च तेजस्वी जनैश्च बहुभिर्वृतः १६

अत ऊर्ध्वं तु सामन्तश्चत्वारिंशत् करावधि
जनानां शतमारब्य सहस्रावधिपोषकः १७

अत ऊर्ध्वन्तु भूपालः पंचाशत् किरणावधि

तत ऊर्ध्वकरैर्विप्र  चक्रवर्ती नृपो भवेत्  १८

एवं प्रसूतिकालोत्थनभोगकरसम्भवम्
कुलक्रमानुसारेण जातकस्य फलं वदेत्  १९

क्षत्रियश्चक्रवर्ती स्याद् वैश्यो राजा प्रजायते
शूद्रश्च सधनो विप्रो यज्ञकर्मक्रियारतः  २०

उच्चाभिमुखखेटस्य कराः पुष्टफलप्रदाः
नीचाभिमुखखेटस्य ततो न्यूनफलप्रदाः  २१

सर्वेषामेव खेटानामेवं रश्मिवशाद्द्विज
शुभं वाऽप्यशुभं चापि फलं भवति देहिनाम्  २२

रश्मिज्ञानं विना सम्यक् न फलं ज्ञातुमर्हति
तस्माद्रश्मीन् प्रसाध्यैव फलं वाच्यं विचक्षणैः  २३

## अथ सुदर्शनचक्रफलाध्यायः  ७४

अथोच्यते मया विप्र  रहस्यं ज्ञानमुत्तमम्
जगतामुपकाराय यत् प्रोक्तं ब्रह्मणा स्वयम्  १

चक्रं सुदर्शनं नाम यद्वशात् प्रस्फुटं फलम्
नृणां तन्वादिभावानां ज्ञातुं शक्नोति दैववित्  २

जन्मतो मृत्युपर्यन्तं वर्षमासदिनोद्भवम्
शुभं वाऽप्यशुभं सर्वं तच्छृणुष्वैकमानसः  ३

एककेन्द्रोद्भवं रम्यं लिखेद् वृत्तत्रयं द्विज
द्वादशारं च तत् कुर्याद् भवेदेवं सुदर्शनम्  ४

तत्राद्यवृत्ते लग्नाद्या भावा लेख्याः सखेचराः

तदूर्ध्ववृत्ते चन्द्राच्च भावाः खेटसमन्विताः ५

तदूर्ध्ववृत्ते सूर्याच्च क्रमात् भावा ग्रहान्विताः
एवमेकैकभावेऽत्र भवेद्भानां त्रयं त्रयम् ६

अत्र तु प्रथमो भावो लग्नेन्दुरविभिर्युतः
तं प्रकल्प्य तनुं त्वग्रे ज्ञेया भावा धनादयः ७

तत्र तत्र ग्रहस्थित्या ज्ञेयं तत्तत्फलं बुधैः
तनुभावे शुभः सूर्यो ज्ञेयोऽन्यत्राशुभप्रदः ८

पापोऽपि स्वोच्चराशिस्थो न भवत्यशुभप्रदः
एवं शुभाऽशुभं दृष्ट्वा तत्तद्भावफलं वदेत् ९

यो भावः स्वामिसौम्याभ्यां युक्तो दृष्टोऽयमेधते
पापैर्दृष्टो युतो यो वा तस्य हानिः प्रजायते १०

ज्ञेयं सग्रहभावस्य ग्रहयोगसमं फलम्
अग्रहस्य तु भावस्य ग्रहदृष्टिसमं फलम् ११

शुभैरेव शुभं पापैर्शुभं मिश्रखेचरैः
शुभाधिके शुभं ज्ञेयमशुभं त्वशुभाधिके १२

एवं भावेषु खेटानां योगं दृष्टिं विलोक्य च
तारतम्येन वाच्यानि फलानि द्विजसत्तम १३

यत्र नैव ग्रहः कश्चिन्न दृष्टि कस्यचिद् भवेत्
तदा तद्भावजं ज्ञेयं तत्स्वामिवशतः फलम् १४

शुभोऽपि शुभवर्गेषु ह्यधिकेष्वशुभप्रदः
पापोऽपि शुभवर्गेषु ह्यधिकेषु शुभप्रदः १५

स्वभोच्चस्य शुभस्यात्र वर्गा ज्ञेयाः शुभवाहाः
शत्रोः क्रूरस्य नीचस्य षड्वर्गा अशुभप्रदाः १६

एवं सर्वेषु खेटेषु भवेष्वपि द्विजोत्तम
शुभाशुभत्वं सञ्चिन्त्य ततस्तत्फलमादिशेत् १७

यदा सुदर्शनादेव फलं सिद्ध्यति देहिनाम्
तदा किं मुनिभिः सर्वैर्लग्नादेव फलं स्मृतम् १८

इति म संशयो जातस्तं छेत्तुमर्हति
पृथग्भगौ यदाऽर्केन्दू लग्नादन्यत्र संस्थितौ १९

तदा सुदर्शनाच्चक्रात् फलं वाच्यं विचक्षणैः
एकभे द्वौ त्रयो वा चेत् तदा लग्नात् फलं वदेत् २०

अथ विप्र प्रवक्ष्येऽहं प्रतिवर्षादिजं फलम्
अस्मात् सुदर्शनादेव दशान्तरदशावशात् २१

तन्वाद्यैर्वर्षमास्सार्धद्विकधस्रान् प्रवर्तयेत्
भावेशादिद्वादशानां दशा वर्षेषु कल्पयेत् २२

तदाद्यन्तर्दशास्तद्वन्मासादौ तद्बलैः फलम्
तं तं भावं प्रकल्प्याङ्कं तत्तत्तन्वादिजं द्विज २३

तत् तल्लग्नात् केन्द्रकोणाष्टमे सौम्याः शुभप्रदाः
यत्र भावे सैंहिकेयो भवेत् तद्भावहानिकृत् २४

पापा वा यत्र बहवस्तत्तद्भावविनाशनम्
विरिष्फारिशुभैः पापैस्त्रिषडायस्थितैः शुभम् २५

एवं प्रत्यब्दमासादौ भावानां फलचिन्तनम्

द्वादशानां दशावृत्त्या दशाश्चायुषि चिन्तयेत्  २६

एवं सुदर्शनाच्चक्राद् वर्षमासादिजं फलम्
ज्ञात्वा तथाष्टवर्गोत्थमुभाभ्यां फलनिर्णयः  २७

उभयत्र समत्वे हि सम्पूर्णं तत् फलं वदेत्
विषमत्वे यदाधिक्यं तत्फलं च बलक्रमात्  २८

अथ पंचमहापुरुषलक्षणाध्यायः  ७५

अथ वक्ष्याम्यहं पञ्चमहापुरुषलक्षणम्
स्वभोच्चगतकेन्द्रस्थैर्बलिभिश्च कुजादिभिः  १

क्रमशो रुचको भद्रो हंसो मालव्य एव च
शशश्चैते बुधैः सर्वैर्महान्तः पुरुषाः स्मृताः  २

दीर्घाननो महोत्साहो स्वच्छकान्तिर्महाबलः
चारुभ्रूर्नीलकेशश्च सुरुचिश्च रणप्रियः  ३

रक्तश्यामोऽरिहन्ता च मन्त्रविच्चोरनायकः
क्रूरोभर्ता मनुष्याणां क्षामाऽङ्घ्रिर्द्विजपूजकः  ४

वीणावज्रधनुःपाशवृषचक्राङ्कितः करे
मन्त्राभिचारकुशली दैर्ध्ये चैव शतांगुलः  ५

मुखदैर्घ्यसमं मध्यं तस्य विज्ञैः प्रकीर्तितम्
तुल्यस्तुलासहस्रेण रुचको द्विजपुङ्गव   ६

भुनक्ति विन्ध्यसह्याद्रिप्रदेशं सप्ततिं समाः
शस्त्रेण वह्निना वापि स प्रयाति सुरालयम्  ७

शार्दूलप्रतिभः पीनवक्षा गजगतिः पुमान्

पीनाजानुभुजः प्राज्ञश्चतुरस्त्रश्च योगवित् ८

सात्त्विकः शोभनांघ्रश्च शोभनश्मश्रुसंयुतः
कामी शङ्खगदाचक्रशरकुञ्जरचिह्नकैः ९

ध्वजलाङ्गलचिह्नैश्च चिह्नितांघ्रिकराम्बुजः
सुनासश्शास्त्रविद् धीरः कृष्णाकुञ्चितकेशभृत् १०

स्वतन्त्रः सर्वकार्येषु स्वजनप्रीणनक्षमः
ऐश्वर्यं भुज्यते चास्य नित्यं मित्रजनैः परैः ११

तुलया तुलितो भारप्रमितः स्त्रीसुतान्वितः
सक्षेमो भूपतिः पाति मध्यदेशं शतं समाः १२

हंसो हंसस्वरो गौरः सुमुखोन्नतनासिकः
श्लेष्मलो मधुपिङ्गाक्षो रक्तवर्णनखः सुधीः १३

पीनगण्डस्थलो वृत्तशिराः सुचरणो नृपः
मत्स्याऽङ्कुशधनुःशंखकञ्जखट्वाङ्गचिह्नकैः १४

चिह्नतांघ्रिकरः स्त्रीषु कामार्तो नैति तुष्टताम्
षण्णवत्यंगुलो दैर्घ्ये जलक्रीडारतः सुखी १५

गङ्गायमुनयोर्मध्यदेशं पाति शतं समाः
वनान्ते निधनं याति भुक्त्वा सर्वसुखं भुवि १६

समौष्ठः कृशमध्यश्च चन्द्रकान्तिरुचिः पुमान्
सुगन्धो नातिरक्ताङ्गो न ह्रस्वो नातिदीर्घकः १७

समस्वच्छरदो हस्तिनाद आजानुबाहुधृक्
मुखं विश्वांगुलं दैर्घ्ये विस्तारे च दशाङ्गुलम् १८

मालव्यो मालवाख्यं च देशं पाति ससिन्धुकम्
सुखं सप्ततिवर्षान्तं भुक्त्वा याति सुरालयम्  १९

तनुद्विजमुखः शूरो नातिह्रस्वः कृशोदरः
मध्ये क्षामः सुजंघश्च मतिमान् पररन्ध्रवित्  २०

शक्तो वनाद्रिदुर्गेषु सेनानीर्दन्तुरः शशः
चंचलो धातुवादी च स्त्रीशक्तोऽन्यधानान्वितः  २१

मालावीणामृदङ्गाऽस्त्ररेखाङ्कितकरांघ्रिकः
भूपोऽयं वसुधा पाति जीवन् खाद्रिसमाः सुखी  २२

## अथ पंचमहाभूतफलाध्यायः  ७६

अथ पञ्चमहाभूतच्छायाज्ञानं वदामि ते
ज्ञायते येन खेटानां वर्तमानदशा बुधैः  १

शिखिभूखाम्बुवातानामधिपा मङ्गलादयः
तत्तद्बलवशाज्ज्ञेयं तत्तद्भूतभवं फलम्  २

सबले मङ्गले वह्निस्वभावो जायते नरः
बुधे महीस्वभावः स्यादाकाशप्रकृतिर्गुरौ  ३

शुक्रे जलस्वभावश्च मारुतप्रकृतिः शनौ
मिश्रैर्मिश्रस्वभावश्च विज्ञेयो द्विजसत्तम   ४

सूर्ये वह्निस्वभावश्च जलप्रकृतिको विधौ
स्वदशायां ग्रहाश्छायां व्यंजयन्ति स्वभूतजाम्  ५

क्षुधार्तश्चपलः शूरः कृशः प्राज्ञोऽतिभक्षणः
तीक्ष्णो गौरतनुर्मानी वह्निप्रकृतिको नरः  ६

